# National

## EXERCISE BOOK

Pages : 96

Price 65 P.




name श्री गुरु गीता

class




Manufactured by :

**Jai Ram Dass Gian Chand**

Ist Bridge, Srinagar (Kashmir)

Member of Kashmir Copy Manufacturers Association (Srinagar Kashmir)

ॐ श्री गणेशाय नमः ॥

ॐ श्री गुरवे सरस्वती रूपाय नमः ॥

ॐ अस्य श्री गुरुगीता स्तोत्र माला ~~म~~ मन्त्रस्य श्रीसदा-
शिव ऋषिः विराट छन्दः श्रीगुरु परमात्मा देवता
हं बीजं सः शक्तिः सोऽहं कीलकं श्रीगुरु प्रसाद सिद्ध्य-
र्थे पाठे विनियोगः ॥
अथ न्यासः ॥ ॐ हं सां सूर्यात्मने अङ्गुष्ठाभ्यां नमः।
ॐ हं सीं सोमात्मने तर्जनीभ्यां नमः। ॐ हं सूं
निरञ्जनात्मने मध्यमाभ्यां नमः। ॐ हं सैं निराभा-
सात्मने अनामिकाभ्यां नमः। ॐ हं सौं अतनु-
सूक्ष्मात्मने कनिष्ठिकाभ्यां नमः। ॐ हं सः अव्यक्ता-
त्मने करतलकर पृष्ठाभ्यां नमः ॥ इति करन्यासः।
अथ षडङ्गन्यासः – ॐ हं सां सूर्यात्मने हृदयाय नमः।
ॐ हं सीं सोमात्मने शिरसे स्वाहा। ॐ हं सूं निरञ्जनात्मने
शिखायै वषट्। ॐ हं सैं निराभासात्मने कवचाय हुम्।
ॐ हं सौं अतनुसूक्ष्मात्मने नेत्रत्रयाय वौषट्। ॐ हं सः
अव्यक्तात्मने अस्त्राय फट् ॥ इति षडङ्गन्यासः ॥

ॐ भूर्भुवः स्वरोम् – इति दिग्बन्धः

अथ ध्यानम् –

ॐ हंसाभ्यां परिवृत्त पत्रकमलै दिंव्यैर्जगत्कारणैः
विश्वोत्तीर्णमनेक देहनिलयं स्वशक्तिमात्मेच्छया।
Incomplete ×× तत्तत्स्यूत विभात देशममल भावैक दीपाङ्कुरं
प्रत्यक्षाक्षर विग्रहं गुरुवरं ध्यायेत विभुं शाश्वतम्॥

ॐ विश्वव्यापिनमादिदेवममलं नित्यं परं निष्कलं
नित्योद्बुद्ध सहस्रपत्रकमले लिप्याक्षरैः मण्डितम्।
नित्यानन्दमयं सुखैकनिलयं सत्यं शिवं स्वप्रभुं
Incomplete ×× ध्यायेदात्मा स्वरूपवित् ...... स्वातन्त्र्यतः
सर्वगम्॥

(इति ध्यानम्)

ॐ वन्दे गुरुपदद्वन्द्वम् वाङ्मनसगोचरम्।
रक्तं शुक्ल प्रभमुग्रम् प्रतर्क्यं परम महत्॥
अचिन्त्याव्यक्त रूपाय निर्गुणाय महात्मने।
समस्त जगदाधार मूर्तये ब्रह्मणे नमः॥

(ऋषिरुवाच)

ऋषय उवाच् :-

गुह्याद्गुह्यतरा विद्या गुरुगीता विशेषतः।
भवत्प्रसादाच्छ्रोतव्या तत्सर्वं ब्रूहि मे सुत॥

सूत उवाच :-

कैलास शिखरे रम्ये भक्तिसाधन हेतवे।
प्रणम्य पार्वती भक्त्या शंकरं पर्यपृच्छत॥

श्री पार्वती उवाच :-

ॐ नमो देवदेवश परात्पर जगद्गुरो।
सदाशिव महादेव गुरुदीक्षां प्रदेहि मे॥
केन मार्गेण भो स्वामिन् देही ब्रह्ममयो भवेत्।
तत्कृपां कुरु मे स्वामिन् नमामि चरणौ तव॥

श्री शिव उवाच :-

मम रूपासि देवि त्वं त्वत्प्रीत्यर्थं वदाम्यहम्।
लोकोपकारकं प्रश्नः न केनापि कृतं पुरा।
दुर्लभं त्रिषु लोकेषु तच्छृणुष्व वदाम्यहं।
गुरुर्ब्रह्म विना नान्यः सत्यं सत्यं वरानने॥

यस्य देवि परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशयन्ते महात्मनः ॥

or should be
गुकारस्त्वन्धकारः स्यादु

गुकारस्तु अन्धकारः स्यादुकारस्तन्निरोधकः ।
अन्धकारनिरोधित्वादरुरित्यभिधीयते ॥
गकारस्य ह्युकारस्य तद्धि नाशं विना सकृत् ।
अन्धकार विनाशत्वादरुरित्यभिधीयते ॥
वेदशास्त्र पुराणानि चैतिहासादिकानि च ।
मन्त्र यन्त्राणि विद्याः स्मृतीरुच्चाटनादिकम् ॥
यदंघ्रि कमलद्वन्द्वं द्वन्द्वताप निवारकम् ।
तारकं भव सिंधोश्च श्रीगुरुं प्रणमाम्यहम् ॥
वेद शास्त्र पुराणानि जानाति कृपया गुरोः ।
अतो लोके गुरुः साक्षात् वर्तते वेद तत्त्ववित् ॥
शैव शाक्तागमादीनि अन्येच बहवो मताः ।
अपभ्रंशाः समस्ताश्च जीवानां भ्रान्तचेतसाम् ॥
यज्ञव्रत तपोदानं जपं तीर्थं तथैवच
गुरोस्तत्त्वमविज्ञाय मूढस्तत्समग्रं ... तं भवेत
गुरो ज्ञानात्मन नान्यस्तत्त्वं सत्यं न संशयः ।
तल्लाभार्थं प्रयत्नस्तु कर्तव्यः सुमनीषिभिः ॥

गुरो: विद्यां जपन्माया देहमज्ञान संचितम् ।
ज्ञातव्यं तत्प्रसादेन गुरो: शिष्येण सर्वदा ॥
देही ब्रह्म भवेत्तस्मात्त्वत्कृपार्थं वदाम्यहम् ।
सर्व पाप विशुद्धात्मा श्रीगुरो: पादसेवनात् ॥
सर्व तीर्थ विगाहस्य संप्राप्नोति फलं नर: ।
गुरो: पादाम्बुजं स्मृत्वा जलं शिरसि धारयेत् ॥
शोषणं पाप पंकस्य दीपनं ज्ञान चेतसाम् ।
गुरो: पादोदकं पेयं संसारार्णव तारकम् ॥
अज्ञानमूल हरणं जन्म कर्म निवारणम् ।
ज्ञान वैराग्य जनकं गुरो: पादोदकं पिबेत् ॥
गुरो: पादोदक पानं गुरोरुच्छिष्ट भोजनम् ।
गुरो: मूर्ते: सदा ध्यानं गुरो: स्तोत्रं सदा जपेत् ॥
काशी क्षेत्रं निवासश्च जाह्नवी चरणोदकम् ।
गुरुर्विश्वेश्वर: साक्षात् तारक ब्रह्म वाचक: ॥
गुरुक्षेत्रं निवासश्च गुरुपादाङ्किता धरा
तीर्थराजं प्रयागोसौ गुरुमूर्त्यै नमो नम: ॥
गुरो: मूर्तिं स्मरेन्नित्यं गुरोर्नाम सदा जपेत् ।
गुरोराज्ञां प्रकुर्वीत गुरो: मन्त्रं विभावयेत् ॥

गुरोः वक्त्रे स्थितं ब्रह्म प्राप्यते तत्प्रसादतः।
गुरोर्मूर्तिः सदा ध्यानं नारी पतिव्रता यथा॥
स्वाश्रमं च स्वजातिं च स्वकीर्तिं पुष्टि वर्धनं।
अन्यत्सर्वं परित्यज्य गुरोः रत्नं विभावयेत्॥
तेषां सदा चिन्तयतां येषां स्वलभं परमं सुखम्।
तस्मात्सर्वप्रयत्नेन गुरोराराधनं कुरु॥
गुरोः वक्त्रे स्थिता विद्या गुरुभक्त्या च लभ्यते।
त्रैलोक्ये स्फुट वक्तारो देवाद्याः सुरपन्नगाः॥
गुकारस्यान्धकारस्य रुकारस्तेन चोद्यते।
अज्ञानग्रासकं ब्रह्म गुरुरेव न संशयः॥
गुकारः प्रथमो वर्णो मायादि गुणभासकः।
रुकारं द्वितीयं ब्रह्म मायाभ्रान्ति विमोचकम्॥
एवं गुरुपदं श्रेष्ठं देवानामपि दुर्लभं।
हाहा हूहू गणैश्चैव गन्धर्वाद्यैश्च पूज्यते॥
ध्रुवं तेषां च सर्वेषां नास्ति तत्त्वं गुरोः परं
आसनं शयनं वस्त्रं वाहनं भूषणादिकम्।
साधकेन प्रदातव्यं गुरोः संतोषकारणं
गुरोराधनं कार्यं यत्प्रियं तन्निवेदयेत्॥

१ भागतम्

आत्मादारादिकं चैव सद्गुरुभ्यो निवेदयेत्।

× कृमि कीट भस्म विष्ठादि मल मूत्रकम् ॥ Incomplete

श्लेष्मारक्त वसा चर्म तत्क्षेत्रं च वरानने।

देहाभिमानिनो रूढाः पतन्ति नरकार्णवे ॥

संसारकूप मग्नानां शिष्याणां भ्रान्त चेतसां

येनोद्धृतमिदं सर्वं तस्मै श्री गुरवे नमः॥

गुरुः ब्रह्मा गुरुः विष्णुः गुरुर्देवो महेश्वरः।

गुरुरेव परं ब्रह्म तस्मै श्री गुरवे नमः॥

गुरुः माता पिता चैव गुरुर्देवो हि बान्धवाः।

गुरोर्देवात्परं नान्यत् तस्मै श्री गुरवे नमः॥

हेतवे जगतामेव संसारार्णव तारणे।

प्रभवे सर्वविद्यानां शम्भवे गुरवे नमः॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जन शलाकया।

चक्षुरुन्मीलितं येन तस्मै श्री गुरवे नमः॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरं।

तत्पदं दर्शितं येन तस्मै श्री गुरवे नमः॥

त्वं पिता त्वं च मे माता त्वं बन्धुस्त्वं च देवता।

संसार प्रतिबोधार्थं तस्मै श्री गुरवे नमः॥

(४)

यत्सत्येन जगत्सत्यं यत्प्रकाशेन भातियत्।
यदानन्देन बोदेति तस्मै श्री गुरवे नमः॥
यस्मिन्स्थितमिदं सर्वं यद्भासा भाति चैव यत्।
यत्प्रियात्प्रिय पुत्रादि तस्मै श्री गुरवे नमः।

चिंत्यते

येन चिन्तयते देही चित्तं चिंन्यते यतः। ×
जाग्रत्स्वप्न सुषुप्तादि तस्मै श्री गुरवे नमः॥
यस्य ज्ञानमिदं विश्वं न दृश्यं भिन्न भावतः।
सदैक रूप रूपाय तस्मै श्री गुरवे नमः॥

Incomplete

यस्य मन्त्रं तस्य मन्त्रं यस्य महात्मनः ×
अनन्य भाव भावाय तस्मै श्री गुरवे नमः॥
यस्य कारणरूपस्य कार्यरूपेण भातियः

×

कार्यकारणताभेति तस्मै श्री - - - - - - ॥
नानारूपमिदं विश्वं न केनाप्यस्ति भिन्नता
कार्य कारणतामेति तस्मै श्री - - - - - - ।

त्रा

शिवः क्रुद्धो गुरुस्त्राता गुरुः क्रुद्धः शिवो नहि
तस्मात्सर्वं प्रयत्नेन श्रीगुरोः शरणं व्रजेत्॥
वन्दे गुरुपदद्वन्द वाङ्मनोतीत गोचरम्
श्वेत रक्त प्रभा युक्तं शिवयोगात्मकं परं॥

गुकारं तु गुणातीतं रुकारं रूप वर्जितं
गुणातीत स्वरूपं च यो दद्यात्स गुरु स्मृतः ॥
अग्निनेत्रो वरः साक्षात् चतुर्बाहु स्त्रिलोचनः
ब्रह्मा यश्चतुर्वदनो ब्रह्म श्री गुरुः कथितः प्रिये ॥
अयं मयाञ्जलिर्बद्धो दयासागर वृद्धये
यदा चानुग्रहो जात घोर संसार मुक्तये ॥
श्री गुरोः परमं रूपं विवेक चक्षुषोग्रतः
मन्द भाग्या न पश्यन्ति अन्धा सूर्योदयं यथा ॥
श्री नाथ चरणद्वन्द्वं यस्यां दिशि विराजते
तस्यै दिशेत नमस्कुर्यात भक्त्या प्रतिदिनं प्रिये ॥
तस्यां दिशि सतत प्राञ्जलि मन्त्र पुष्पैः
प्रक्षिप्यते सुख करैश्च द्विरेफ युक्तैः ॥
जागर्ति यत्र भगवान् गुरु चक्रवर्ती
सृष्टि स्थिति प्रलय नाटक नित्य साक्षी ॥
स्वात्विकादि गुणैः प्रशस्त विभवै र्व्याधि हरैर्दुष्करैः
प्राणायाम शतै महेश्वर पदं न प्राप्यते मानवैः ॥
यत्कारुण्य लवेन प्राणमहता यत्नाः स्वयं तत्क्षणात
सेव्यः स परमार्थ चिन्तनपरो वेदार्थ विच्छ्री गुरुः ॥

~~मुखे:~~ गुरुर्देवो जगत्सर्वं ब्रह्मविष्णुशिवात्मकः
गुरोः परतरं नास्ति तस्मात्संपूजयेद् गुरुम्॥

सर्वश्रुतिशिरोरत्नविराजितपदाम्बुजः
वेदान्ताम्बुजसूर्याय तस्मै श्रीगुरवे नमः॥

× यस्मात्परतरं ~~नास्ति~~ नान्यत् ~~[illegible]~~ किंचित्नास्ति
मनसा वचसा ग्राह्याय ~~यस्य~~ तस्मै श्रीगुरवे नमः॥

गुरुदेव प्रसादेन ब्रह्मविष्णुहरादिषु
सामर्थ्यं प्राप्यते . . . . . . . . .

ज्ञानी कामी तथा योगी गुरुर्दीयः सुखप्रदः
त्रिभिर्हीनं त्यजेद् दूरे मिथ्याज्ञान प्रदर्शीकम्॥

यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयं
विज्ञानशेवधिदात्रे तस्मै श्री गुरवे नमः॥

देव किंनर किन्नर गन्धर्वाः पितृ यक्षाश्च चारणाः
मुनयोपि न जानन्ति गुरु शुश्रूषणाविधिम् ॥

× महा हंकार संयुक्तास्तपो बलान्विताः ×
संसार कुहरावर्ते घटी यन्त्रे यथा पुनः ॥

देवदानव गन्धर्वाः पितरो यक्षकिन्नराः
ऋषयो सर्वे सिद्धाश्च गुरुसेवापराङ्मुखाः ॥

ध्यानं शृणु महादेवि सर्वानन्द प्रदायकं
सर्व सौख्य करं चैव भक्ति मुक्ति प्रदायकम् ॥

अथ ध्यानम्
स्वदैशिकस्यैव शरीर चिन्तनं
भवेदनन्तस्य शिवस्य ~~शिवस्य~~ चिन्तनम्।
Omit
स्वदैशिकस्यैव च नाम कीर्तनम्
भवेदनन्तस्य शिवस्य कीर्तनम्।
2 lines [illegible]
श्रीमत्परं ब्रह्मगुरुं स्मरामि
श्रीमत्परं ब्रह्मगुरुं नमामि ॥

ॐ ब्रह्मानन्दं परम सुखदं
केवलं ज्ञानमूर्तिम् ।
द्वन्द्वातीतं गगन सदृशं
तत्त्वमस्यादि लक्ष्यम्
एकं नित्यं विमलमचलं
सर्वदा साक्षिभूतं
भावातीतं त्रिगुणरहितं
सद्गुरुं तं नमामि ॥

आनन्दमानन्दकरं प्रसन्नं
ज्ञानस्वरूपं निजबोध युक्तम् ,
योगीन्द्रमीड्यं भवरोगवैद्यं
श्रीसद्गुरुं नित्यमहं नमामि ॥

हृदम्बुजे कर्णिका मध्य संस्थे
सिंहासने संस्थित दिव्य मूर्तिम् ।
ध्यायेद्गुरुं चन्द्र कला वतंसं
सच्चिन्मुखाभीष्ट वरं दधानम् ॥

श्वेताम्बरं श्वेत विलेप पुष्पं मुक्ताविभूषं मुदितं द्विनेत्रम्
वामाङ्कपीठे स्थित दिव्य शक्तिं मन्दस्मितं शान्तिकृपा निधानम् ॥

यस्मिन्सृष्टि स्थिति ध्वंस पिधानानुग्रहात्मकं ।
नु कृत्यं पञ्चविधं शश्वत् भासते तं नुमः शिवम् ॥

यत्पादरेणुभिर्नित्यं कोऽपि संसारवारिधेः
सेतुं बध्नन्ति नाथं दैशिकं तमुपास्महे ॥

प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुं
वराभयकरं शान्तं स्मरेत्तं नामपूर्वकम् ॥

नित्यं शुद्धं निराभासं निराकारं निरञ्जनं
नित्य बोधं चिदानन्दं गुरुं ब्रह्म नमाम्यहं ॥

कालानलाम्बुज
यदादिस्थं च संसार वृक्ष बीजमनश्वरम्
ब्रह्मरन्ध्रसिताम्बोज मध्यस्थं चन्द्र मण्डलं ॥

द्वि ?

आकाशादिरेखान्ति: सहस्रदलमंडिते
हंसरूपे त्रिकोणे च स्मरेत्तं मध्यतो गुरुम् ॥

explain
९।

सकल भुवन दृष्टिःकल्पिताशेष दृष्टिः
अखिलगण परमेष्ठि स्तत्परार्थैक दृष्टिः
निखिल शमनदृष्टिः संपदार्थैक दृष्टिः
भवमण परमेष्टिः मेरु सारैक दृष्टिः

न गुरोरधिकं न गुरोरधिकं
न गुरोरधिकं न गुरोरधिकम् ।
मम शासनतो मम शासनतो
मम शासनतो मम शासनतः ॥

इदमेव शिव इदमेव शिवः
इदमेव शिवे इदमेव शिव ।
शिवशासनतः शिवशासनतः
शिवशासनतः शिवशासनतः ॥

एवं विधं गुरुं ज्ञात्वा ज्ञानमुत्पद्यते स्वयं
तदा गुरूपदेशेन मुक्तोऽहमिति भावयेत् ॥
गुरुणा दर्शितैर्मार्गैः मनः शुद्धं तु कारयेत्।
अनित्यं ख खण्डयेत्सर्वं यत्किंचिद्ध्यान गोचरम् ॥
ज्ञेयं सर्वमनित्यं च ज्ञानं च मन उच्यते।
ज्ञानं ज्ञेयं समं कुर्यात् सद्गुरोरुपदेशतः ॥
चैतन्यं शाश्वतं शान्तं व्योमातीतं निरञ्जनं।
बिन्दुनाद कलातीतं तस्मै श्री गुरवे नमः ॥
स्थावरं निर्मितं शान्तं जंगमं स्थिरमेव च।
व्याप्तं येन जगत्सर्वं तस्मै श्री गुरवे नमः ॥
ज्ञान शक्ति समारूढ तत्त्वमाला विभूषितं
भुक्ति मुक्ति प्रदाता च तस्मै श्री गुरवे नमः ॥
अनेक जन्म संप्राप्त कर्म बन्ध विदाहिने
ज्ञानानल प्रभावेन तस्मै ...... ॥
न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः
तत्त्वज्ञानात्परं नास्ति तस्मै श्री गुरवे नमः ॥
मन्नाथः श्री जगन्नाथो मद्गुरुः श्री जगद्गुरुः
स्वात्मैव सर्वभूतात्मा तस्मै श्री — ॥

गुरुरादिरनादिश्च गुरुः परमदैवतं
गुरोः परतरं नास्ति तस्मै श्री— ॥

ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम्
मन्त्रमूलं गुरोः वाक्यं मोक्षमूलं गुरोः कृपा ॥

सप्तसागर पर्यन्त तीर्थस्नान फलं यथा
गुरोरंघ्रि जलबिन्दु सहस्रांशं फलं तथा ॥

गुरुरेव जगत्सर्वं ब्रह्मविष्णु शिवात्मकं
गुरोः परतरं नास्ति तस्मात्संपूज्यते गुरुः ॥

ज्ञानं विना मुक्ति पदं लभ्यते गुरुभक्तितः
गुरु सामान्यतो नान्यत् विद्यते जगतीतले ॥

एवं ज्ञात्वा महादेवि गुरोः निन्दा करोति यः
स याति नरकान्घोरान् यावद्भूमिदिवरे ॥ दिवाकरौ

गुशब्दस्तु गुणातीतो रूपातीतं रुकारकः
गुणरूप विहीनत्वात् गुरुरित्यभिधीयते ॥

करुणा खड्गपातेन छेत्त्वा स्वशिष्य पाशकान
सम्यगानन्द जनकः सद्गुरुः सोऽभिधीयते ॥

यावत्तिष्ठेदयं देहो तावदेव गुरुं स्मरेत्
गुरुलोपो न कर्तव्यः ~~स्वछं~~ स्वच्छन्दो यदि वा
भवेत् ॥

हुंकारेण न वक्तव्यम सत्यं च कदाचन
गुरोरग्रे न वक्तव्य म सत्यं च कदाचन ॥
गुरुं हुंकृत्य हुंकत्य गुरुं निर्जित्य वादत:
अरण्ये निर्जले देशे स भवेद्ब्रह्म राक्षस: ॥
मुनिभि: पन्नगैर्वापि सुरैर्वा शापितो यदि
काल मृत्यु भयाद्वापि गुरु: रक्षति पार्वति ॥
अशक्ताहि सुराद्याश्च ह्यशक्ता मुनयस्तथा
गुरु शापेन ते क्षीणा: क्षयं यान्ति न संशय: ॥
श्रुति स्मृति तत्त्वज्ञानं प्राप्नोति गुरु सेवया
ते वै संन्यासिन: प्रोक्ता इतरे वेशधारिण: ॥
यत्रैव तिष्ठते सोऽपि स देश: पुण्य भाजनम्
मुक्तस्य लक्षणं देवि तवाग्रे कथितं मया ॥
मंत्रराजमिदं देवि गुरुरित्यक्षर द्वयम
स्मृति वेदार्थ वाक्यानां गुरुस्सा साक्षात्परं पदं ॥
नित्यं ब्रह्म निराकारं निर्गुणं बोधयेत्परं
पूर्ण ब्रह्म निराभासं दीपो दीपान्तराद्यथा ॥

गुरोः कृपा प्रसादेन ह्यात्मारामं निरीक्षयेत्
अनेन मुक्ति मार्गेण स्वात्मज्ञानं प्रवर्तते ॥

आब्रह्मस्तम्भ पर्यन्त परमात्मस्वरूपकम्
स्थावर जंगम मयं प्रणमामि जगद्गुरुम् ॥

निर्लेपं

पद्मस्वभावं निर्लेपं दूरगमन्तरस्थितम्
उत्तरस्यैवं सर्वस्य बहिः स्थं नौमि सद्गुरुम् ॥

वन्देहं सच्चिदानन्दं भेदातीतं गुरोः परम्
नित्यं पूर्णं निराभासं निर्गुणं स्वात्म संस्थितम् ॥

परात्परतरं ध्येयं नित्यमानन्द कारकम्
हृदयाकाश मध्यस्थं शुद्ध स्फटिक सन्निभं ॥

स्फाटिके प्रतिमारूपं दृश्यते दर्पणे चवै
तथात्मानं चिदाकाशे संस्मरेत्सोहमित्युत ॥

अंगुष्ठमात्रं पुरुषं ध्यायत चिन्मयं हृदि
तत्र स्फुरति भावोयः श्रुत्वा तं कथयाम्यहम् ।

अजो ह्यजरो नित्यो विशुद्धो नित्यतां गते
अविकार चिदानन्दः प्रणयाम् ते स्मराम्यहं ॥

अपूर्वानन्दं नित्यं स्वयं ज्योति निरामयं
विरजस्क पर ब्रह्ममानन्द परमव्ययम् ॥

अगोचरं तथागम्यं नामरूपादि वर्जितम्
निःशब्दं तं विजानीयात्स्वभावं ब्रह्म पार्वति ॥
यथा निज स्वभावेन कर्पूर कुसुमादिषु
शीतोष्णादि स्वभावश्च तथा ब्रह्मच शाश्वतं
स्वयं तथाविधोभूत्वा स्थातव्यं यत्रकुत्रचित "
कीटे भृंग इव ध्यानाद्य यथा भवति तादृशः ॥
किमत्र बहुनोक्तेन शास्त्र कोटि शतेन च
दुर्लभा चित्तविश्रान्तिः सद्गुरोः करुणां विना ॥
निमेषार्धार्ध पातेन यद्वाक्याद्वै विलोक्यते
स्थिरमाप्ति स्वात्मा च स्थैर्यमाप्नोति मारत्ते तस्मै श्री गुरवे नमः ॥
सद्गुरु ध्यानेन नित्यं देही ब्रह्म मयो भवेत
पिंडे पदे तथारूपे मुक्तोऽसौ नात्रसंशयः ॥
स्वयं सर्वमयो भूत्वा तत्पर चावलोकयेत्
परात्परतरं नान्यत सर्वमेव निरामयम् ॥
तस्यावलोकनादेव सर्व संग विवर्जितः
एकाकी निस्पृहः शान्तः तिष्ठेत्तस्य प्रसादतः
लब्धं वाप्यथवालब्धमल्पं वा बहुलं तथा ॥
निष्कामेनैव भोक्तव्यं सदा सन्तुष्टमानसैः ॥

सर्वज्ञपदमित्याहुः देही सर्वमयो हि सः
सदाशान्तः सदानन्दो रमते यत्र कुत्रचित् ।
कुलानि कुलकोटीश्च तारयत्स च तत्क्षणात्
अतस्तं सद्गुरुं ज्ञात्वा त्रिकालमभिवन्दयेत ॥
साष्टाङ्ग प्रणिपातेन स्तुवन्नित्यं गुरुं भजेत
भजनात्स्थैर्यमाप्नोति स्वस्वरूपमयो भवेत ॥
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
~~लब्ध्वा~~ लब्ध कुलगुरु सम्यग्गुरु सेवा समाश्रय् ॥
मधु लब्धो यथा भृंगः पुष्पात्पुष्पान्तरं व्रजेत
ज्ञानलुब्धस्तथा शिष्यो गुरोः गुर्वान्तरं व्रजेत ॥
ज्ञानहीनो गुरुस्त्याज्यो मिथ्यावादी हि दाम्भिकः
स्वविश्रान्तिं न जानाति परान्विश्रान्तयेत्कथम् ॥
शिलायां किं परः सारः शिलासंग परित्यजेत्
स्वयं तीर्णो भवेन्नासौ परं निस्तारयेत्कथम् ॥
व वन्दनीयाः कष्टेऽपि दर्शन भ्रान्तिकारकाः
वर्जनीया हि गुरवो धीरैस्तु सन्मताश्रयैः ॥
नरः फलमवाप्नोति

मूढा वृद्धाश्च भक्ताश्च मौनवृत परायणा:
सन्यासं त्यक्तकामाश्च पंचधा गुरवो मता: ॥
सर्वं गुरुमुखाल्लब्धं सुफलं पापनाशकम
यद्यदात्महितं वस्तु तद्द्रव्यं न च वंचयेत ॥
श्री गुरो: पादुकां मुद्रां मुखमंत्रं च गोपयेन
गुरुदेये हि किं वस्तु तेन तुष्यासि सुव्रते ॥
गुरुत्यागाद्भवेत्मृत्यु: मंत्रत्यागाद दरिद्रता
गुरुमन्त्र परित्यागी रौरवं नरकं व्रजेत ॥

पाषाण्डिन: पापरता नास्तिका भेदबुद्धय:
स्त्री लम्पटा दुराचारा कृतघ्ना बकवृत्तय: ॥
कर्म भ्रष्टक्षमा हीना निन्दकास्तर्क वादिन:
कामिन: क्रोधिनश्चैव हिंसकाश्च शठास्तथा
न एत गुरुभिस्त्याज्य: सर्वं धर्म बहिष्कृता: ॥
शिष्याय ज्ञानं दातव्यं महापाप विरोधिने ॥
एवं हि गुरव: सेव्या ऐक्यभक्त्या विचार्य च
गुशब्दस्तु शिव: प्रोक्त:॥ उकारो ब्रह्म चोच्यते

रुद्रावुस्तु रविः प्रोक्तो गुरुः सर्वार्थकोविदः
महतां चैव भूतानां प्रलये समुपस्थिते ॥
स्वतन्त्र शिवो भूत्वा संपूर्णो भवति महान्
उपदेशो ह्यदेवि गुरु मार्गेण मुक्तिदः ॥
गुरुभक्तिस्तथा ध्यानं सकल तत्व कीर्तितम्
ध्यात्वा प्रत्यक्षमेवै तद्ध्यामि च वदामि व ॥

लोकोपकारकं देवि गुरुमभ्यर्च्य येत सदा
न यावद्गुरु कारुण्यं लभते मोक्षकारणम् ॥

नताः स्मते नाथ पादारविन्दम
बुद्धीन्द्रिय प्राण मनो वचोभिः
यैश्चिन्त्य तद्हृदि भाव युक्तैः
मुमुक्षुभिः कर्म भयोरुपाशात् ॥

ज्ञानात्म शुद्ध विभवेन नित्यम
यौ वै स्मरेत देव पदाब्ज द्वन्दम्
अत्यन्त विज्ञानघने विशुद्धम्
सोऽहं चिदानन्दघनं भजामि ॥

श्री पार्वत्युवाच

पिंडं तु किं महादेव पदं किं समुदाहृतम्
रूपातीतं तु यद्रूपं तत्त्वमाख्याहि शंकर ॥

श्री शिव उवाच :-

पिंडं कुण्डलिनी शक्तिः पदं हंसरुदाहृतः
रूपं बिन्दुरिति ज्ञेयं रूपातीतो निरंजनं ॥
लौकिकस्तु गुरुर्भाति भक्त्यार्थैं हि परं स्तुयः
ज्ञानेन भावयेत्सर्वं कर्मनिष्काम कार्यतः ॥
यद्यप्यधीता निगमाः षड् षडंगा सागमाः प्रिये
अध्यात्मादीनि शास्त्राणि ज्ञानं नास्ति गुरुं विना ॥
निरस्य सर्व सन्देहमेकीकृत्यार्थं दर्शनं
तपस्यन्तं रहस्यस्य भजामि गुरुमीश्वरं ॥
लौकिकात्कर्मणो याति नहि तत्परमं पदं
ज्ञानं च भावयेत् सर्वं कर्म निष्काम कार्म्यतः ॥
उपविश्य ततो देवि जपेदेकाग्रमानसः
ध्येयं शुक्लं च शांत्यर्थं वश्ये रक्ता सनं प्रिये ॥

अभिचारे कृष्ण वर्णं पीत वर्णं धनागमे
उत्तरे शान्ति जाप्यं च वश्ये पूर्व मुखोदितं ।।
दक्षिणे मारणे प्रोक्तं स्तम्भने पश्चिमं मुखं
मोहने सर्व भूतानां बन्धमोक्षकरं परम् ।।
मन्यन्ते देवता ह्यास्त्रां राजाः स्युर्वशे वदाः
मुखस्तम्भ करं नृणां गुरूणां भक्ति वर्धनं ।।
दुष्कर्म नाशनं चैव सुकर्म सिद्धिदं भवेत्
असिद्धं साधयेत्सर्वं नवग्रह भयापहम् ।।
दुःस्वप्न नाशनं चैव सुस्वप्न फलदायकम्
सर्व शान्तिकरं नित्यं ~~सुपुत्रं~~ तथा वन्ध्या - सुपुत्रदम् ।।
य अवैधव्यकरं स्त्रीणां सौभाग्य जननं सदा
आयुरारोग्य मैश्वर्यं पुत्र पौत्र विवर्धनं ।।
अकामात् विधवा नारी जपन्ती मोक्षमवाप्नुयात्
अवैधव्यं सकामेन लभ्यते ह्यन्य जन्मनि ।।
सुखं दुःख भयं विघ्न नाशयेत्ताप कारकं
सर्व बाधा प्रशमनं धर्मार्थ काम मोक्षदे ।।

यं यं कामयते कामं तं तमाप्नोति निश्चितम् ।
कामदं कामधेनुश्च कल्पितं कल्पवृक्षकम् ॥
चिन्तामणिं चिन्तितस्य सर्व मंगल दायकम्
लिखित्वा दापयेद् योवै श्रेयः परमवाप्नुयात् ॥
कामेन जपते योवै तस्य कामफल प्रदम् ।
जपन्ते शाक्त सौराश्च शैव गाणेशा वैष्णवाः ॥
शैवस्य सिद्धिदं देवि सत्यं सत्यं न संशयः
अथ काम्य जपस्थानं कथयामि वरानने ॥
सागरान्ते नदीतीरे तीर्थो हरिहरालये ।
शक्ति देवालये गोष्ठे सर्व देवालये शुभे ॥
वटस्थे धात्रिमूले च तथा वृन्दावने पिवा
पवित्रे निर्मले स्थाने नित्यानुष्ठान केपिवा ॥
सन्निहितेन मौनेन जपमेतत्समारभेत्
जप्तेन फलमवाप्नोति ह्यश्वमेधशतस्य च ॥
हीन कर्म त्यजेत्सर्वं स्थानानि ह्यधमानि च
शेटे श्मशाने भयभूमौ च वटमूलान्तिके तथा ॥
सिद्ध्यन्ति धौतरी मूले चूत वृक्षस्य सन्निधौ
पश्चिमाभिमुखं ध्यायेत्मोहने सर्वदा भवेत् ॥

दक्षिणाभिमुखे ध्यायेन्मारणं च भवेत्सदा
गुरुगीता ~~प्रय~~ प्रयाणे च संग्रामे शत्रुसंकटे ॥
जपेन जयमाप्नोति: मरणे मुक्ति दायके।
गुरु ददाति शिष्याय कर्म फलं हेतवे ॥
शुभ कर्माणि सर्वाणि सर्वे दीक्षा च सिद्धयति
संसार मलनाशाय भवपापनिवृत्तये ॥
गुरुगीताम्भसि से स्नानात् तत्त्वज्ञो भवति सदा
स एव हि गुरुः साक्षात् सदसद्ब्रह्मवित्तमः ॥
तस्य स्थानानि सर्वाणि पवित्राणि न संशयः
देशः स शुद्धो यत्रासौ श्रीगुरु तिष्ठति सदा ॥
तत्र देवगणाः सर्वे क्षेत्रे पीठे वसन्ति च
ह्यासनस्थो शयनस्था गच्छन् तिष्ठन्नथापि वा
अश्वारूढो गजारूढो जाग्रत स्वप्नगतोपि वा ॥
शुचिष्मांस्तु सदा ज्ञानी गुरुगीता जपेन तु ॥
तस्य दर्शन मात्रेण पुनर्जन्म न विद्यते
गुरोः तीर्थे वसेन्नित्यं सर्वत्रसुख भाग भवेत् ॥
समुद्रस्य यथा तोयं क्षीरे क्षीरं जले जलम्
भिन्ने कुम्भे यथाकाशस्तथा~~त्मा~~ परमात्मनि ॥

यथा ज्ञानेन जीवात्मा परमात्मेति सर्वज्ञः
ऐकेच्यन रमते ~~ब्रह्ममुक्तः~~ ज्ञानी यत्र तत्र दिशाविदिशि ॥
एवं विधो महामुक्तः सर्वत्र वर्तते सदा
तस्मात्सर्व प्रयत्नेन भाव भक्तिं करोतिय ः ॥
तुष्टुः सेद्रुही जगति मुक्तो भवति पार्वति ।
भक्ति मुक्त्युदयस्तस्य जिह्वाग्रे वसते सदा ॥
अनेन प्राणिनः सैव गुरुगीता जपेन तु
सर्वसिद्धिमाप्नुवन्ति लभन्ते मुक्तिमेव च ॥
सत्यं सत्यं पुनः सत्यं धर्म्यं सारं्यं मयोदितं
गुरुगीता समो नास्ति नास्ति तत्त्वं गुरोः परम् ॥
एको देवश्चैक धर्मश्चैकनिष्ठुः परन्तपः
गुरो परतर नास्ति सत्यं सत्यं वरानने ॥
माता धन्या पिता धन्यो धन्यो सर्वोत्र संभवः
धन्या च वसुधा देवी गुरु भक्तिस्तु दुर्लभा ॥
शरीरमिन्द्रिय प्राणाः मित्र बान्धवाः
माता पिता कुलं देवी गुरुरेव न संशयः ॥
अनेक जन्मविहिताः यज्ञदान तपः क्रिया,
तत्सर्वं सफलं देवि गुरोः संतोष मात्रतः ॥

विद्याधनं बलं चैव तेषां भाग्यं निरर्थकम्।
सेवन्ते ये गुरुन्नैव सत्यं सत्यं वरानने॥

तेभ्यो नेयं प्रदातव्या मन्यन्ते ये न ताञ्जना
गुरुगीता महेशाने सत्यमेव न संशयः॥

ब्रह्मविष्णुमहेशादि देवर्षि पितृकिन्नराः
सिद्धचारणयक्षाश्च ह्यन्येऽपि मुनयो जनाः॥
गुरुभावः परं तीर्थं मन्य तीर्थं निरर्थकम्
इदं रहस्यं परम् तवाग्रे कथितम् मया॥
? देयं सुगोप्यं शिष्याय आत्मा च वरवर्णिनि।
तेन समुच्यते शिष्यो घोर संसारबन्धनात्॥
कन्या भर्तृगृहस्थास्व यदि सा तत्पराङ्मुखा,
यथा स्यान्निष्फलं तस्य गृहे सर्वं सदा भवेत्॥
तथैव हि शिष्यकुलं गुरुसेवा पराङ्मुखम्।
सुदुर्लभ्यात्म तत्त्वं विज्ञेयं श्री गुरोर्मुखात्
स्वामि? गणेशानां वैष्णवानां च पार्वति।
न वक्तव्यं तत्त्वज्ञानं मत्यादाचारतौ बुधैः॥

अती बुद्धि प्राचुर्य श्रद्धाभक्ति मते सते
वक्तव्यं तु इदं देवि मम गुह्यं सदा प्रिये ।।
मूर्खाय च न दातव्या गुरुगीता कदाचन
मनसापि न वक्तव्या सदापाप रताय च ।।
गुरु मंत्र मुखे यस्य तस्य सिद्धिर्भवेद् ध्रुवम् ।
इदं रहस्यं परमं चोक्तं ते पावनं प्रिये ।।
गुरवो बहवः सन्ति शिष्य वित्तापहारकः
स गुरुः दुर्लभो देवि शिष्य संताप हारकः ।।

यस्य प्रसादादहमेव विष्णु
मय्येव सर्वं परिकल्पितं च ।
इदं विजानाति सदात्मरूपम्
तदाङ्घ्रिपद्मं प्रणतोस्मि नित्यम् ।।

संसार सागर समुद्धरणैक मंत्रं
ब्रह्मादि देव मुनि पूजित सिद्ध मंत्रम्
दारिद्र्य दुःख भय शोक ~~निवास~~ विनाश मंत्रं
वन्दे महाभय हर गुरुराज मंत्रम् ।।

इति श्री गुरु गीता समाप्ता.

28 Nov 1976
8 pm

